भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥ २०८ ॥

भ्रूणघ्नेति ॥ भ्रूणघ्नेत्युपलक्षणाद्ब्रह्मघ्नेत्यादिपतितावेक्षितं रजस्वलया च स्पृष्टं पक्षिणा च काकादिना स्वादितं कुक्कुरेण च स्पृष्टमन्नं न भुञ्जीत ॥ २०८ ॥

गवा चान्नमुपाघ्रातं घुष्टान्नं च विशेषतः ।
गणान्नं गणिकान्नं च विदुषा च जुगुप्सितम् ॥ २०९ ॥

गवेति ॥ यदन्नं गवाघ्रातं । घुष्टान्नं को भोक्तेत्युपोद्घुष्टान्नं सत्रादौ यद्दीयते । विशेषत इति भूरिदोषतया प्रायश्चित्तगौरवार्थम् । गणान्नं शतब्राह्मणसङ्घान्नम् । गणिका वेश्या तस्या अन्नम् । शास्त्रविदा च यद्दुष्टमिति निन्दितं तच्च न भुञ्जीत ॥ २०९ ॥

स्तेनगायनयोश्चान्नं तक्ष्णो वार्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ २१० ॥

स्तेनेति ॥ चौरगायनजीविनोस्तथा तक्षवृत्तिजीवनस्य वृद्ध्युपजीविनश्चान्नं न भुञ्जीत । तथा यज्ञे दीक्षितस्य प्रागग्नीषोमीयात् । कदर्यस्य कृपणस्य । निगडस्येति तृतीयार्थे षष्ठी । निगडेन बद्धस्य । गोविन्दराजस्तु बद्धशब्दस्य बन्धनैर्विनाप्ययोनिगडैर्निगडितस्य दत्तायोनिगडस्येति व्याख्यातवान् ॥ २१० ॥

अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च ।
शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥ २११ ॥

अभिशस्तस्येति ॥ महापातकित्वेन संजातलोकविक्रोशस्य, नपुंसकस्य, पुंश्चल्या व्यभिचारिण्या अगणिकाया अपि, दाम्भिकस्य छद्मना धर्मचारिणो बैडालव्रतिकादेरन्नं न भुञ्जीत । शुक्तं यत्स्वभावतो मधुरं दध्यादिसंपर्कवशेनोदकादिना चाम्लादिभावं गतम्, पर्युषितं रात्र्यन्तरितम्, शूद्रस्यान्नं न भुञ्जीतेति संबन्धः । उच्छिष्टं च भुक्तावशिष्टान्नमविशेषात्कस्यापि न भुञ्जीत । गुरूच्छिष्टं च विहितत्वाद्भोज्यम् । गोविन्दराजस्तु शूद्रस्योच्छिष्टं तद्भुक्तावशिष्टं च स्थालीस्थमपि न भुञ्जीतेत्याह ॥ २११ ॥

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ॥ २१२ ॥

चिकित्सकस्येति ॥ चिकित्साजीविनः, मृगयोर्मांसविक्रयार्थं मृगादिपशुहन्तुः, क्रूरस्यानृजुप्रकृतेः, निषिद्धोच्छिष्टभोक्तुरन्नं न भुञ्जीत । उग्रो दारुणकर्मा तस्यान्नम् । 'गोविन्दराजो मञ्जर्यामुग्रं राजानमुक्तवान् । मनुवृत्तौ च शूद्रायां क्षत्रियोत्पन्नमभ्यधात् ॥ भेदोक्तेर्याज्ञवल्कीये नोग्रो राजेति वावदत् । आश्चर्य-

मिदमेतस्य स्वकीयहृदि भूषणम् ॥' सूतिकान्नं सूतिकामुद्दिश्य यत्क्रियते तदन्नं तत्कुलजैरपि न भोक्तव्यम् । एकपङ्क्तिस्थानन्यानवमन्य यत्रान्ने भुज्यमाने केनचिदाचमनं क्रियते तत्पर्याचान्तम् । अनिर्दशं सूतिकान्नं वक्ष्यमाणत्वान्न भुञ्जीत ॥ २१२ ॥

अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ॥ २१३ ॥

अनर्चितमिति ॥ अर्चार्हस्य यदवज्ञया दीयते, वृथामांसं देवतादिकमुद्दिश्य यन्न कृतं, अवीरायाः पतिपुत्ररहितायाः, शत्रुनगरपतितानां च, उपरि कृतक्षुतं चान्नं न भुञ्जीत ॥ २१३ ॥

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा[1] ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥ २१४ ॥

पिशुनेति ॥ पिशुनः परोक्षे परापवादभाषणपरः, अनृत्यतिशयेनानृतवादी कूटसाक्ष्यादिः, क्रतुविक्रयिकः 'मदीययागस्य फलं तव भवतु' इत्यभिधाय यो धनं गृह्णाति, शैलूषो नटः, तुन्नवायः सौचिकः, कृतघ्नो यः कृतोपकारस्यापकारे प्रवर्तते तस्यान्नं न भुञ्जीत ॥ २१४ ॥

कर्मारस्य निषादस्य रङ्गावतरकस्य[2] च ।
सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥ २१५ ॥

कर्मारस्येति ॥ कर्मारस्य लोहकारस्य, निषादस्य दशमाध्यायोक्तस्य, नटगायनव्यतिरिक्तस्य रङ्गावतरणजीविनः, सुवर्णकारस्य, वेणोर्भेदनेन यो जीवति, 'बुरुड' इति विश्वरूपः । शस्त्रं लोहं तद्विक्रयिणश्चान्नं न भुञ्जीत ॥ २१५ ॥

श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥ २१६ ॥

श्ववतामिति ॥ आखेटकाद्यर्थं शुनः पोषकाणां, मद्यविक्रयिणां, वस्त्रधावकस्य, कुसुम्भादिना वस्त्ररागकृतः, निर्दयस्य, यस्य चोपपतिर्गृहे जारश्च यस्याज्ञानतो गृहे स्थितस्तस्य गेहे नाद्यात् ॥ २१६ ॥

मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥ २१७ ॥

मृष्यन्तीति ॥ गृह इत्यनुषज्यते । गेहे ज्ञातं भार्याजारं ये सहन्ते तेषामन्नं न भुञ्जीत । तेन गृहान्निःसारितया जारसहने नैष दोषः । तथा सर्वकर्मसु स्त्रीपरतन्त्राणां, अनिर्गताशौचं च सूतकान्नं, अतुष्टिकरमेव च न भुञ्जीत ॥ २१७ ॥

पाठा०—1 क्रतुविक्रयिणस्तथा. 2 रङ्गावतारकस्य च.

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः॥ २१८॥

राजान्नमिति॥ राजान्नं तेजो नाशयति। इत एव दोषदर्शनात्तदन्नभक्षण-निषेधः कल्प्यते। एवमुत्तरत्रापि। पूर्वमनिषिद्धस्य दोषदर्शनादेव निषेध-कल्पनम्। 'नाद्याच्छूद्रस्य पक्कान्नम्' (४।२२३) इति निषेधिष्यति तदतिक्रम-णफलकथनमिदम्। शूद्रस्य पक्कान्नमध्ययनादिनिमित्तं तेजो नाशयति। सुवर्णकारस्यान्नमायुः। चर्मकारान्नं ख्यातिं नाशयति॥ २१८॥

कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च।
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति॥ २१९॥

कारुकान्नमिति॥ कारुकस्य सूपकारादेरन्नं प्रजामपत्यं निहन्ति। चर्मकारादेः कारुकत्वेऽपि गोबलीवर्दन्यायेन पृथङ्निर्देशः। निर्णेजकस्यान्नं बलं हन्ति। गणगणिकयोरन्नं च कर्मान्तरार्जितेभ्यः स्वर्गादिलोकेभ्य आच्छिनत्ति॥ २१९॥

पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्।
विष्ठा वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम्॥ २२०॥

पूयमिति॥ चिकित्सकस्यान्नं पूयं पूयभक्षणसमदोषम्। एवं पुंश्चल्या अन्नमिन्द्रियं शुक्रम्। वार्धुषिकस्यान्नं पुरीषम्। लोहविक्रयिणोऽन्नं विष्ठान्यति-रिक्तश्लेष्मादि। गोविन्दराजस्तु चिकित्सकान्नभक्षणेन तथाविधायां जातौ जायते यत्र पूयभुग्भवतीत्याह॥ २२०॥

य एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्तिताः।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः॥ २२१॥

य एतेऽन्य इति॥ प्रतिपदनिर्दिष्टेभ्यो येऽन्ये क्रमेणाभोज्यान्ना अस्मि-न्प्रकरणे पठितास्तेषां यदन्नं तत्त्वगस्थिरोमाणि, यास्तदीयास्त्वचः कीकसस्य रोम्णां च भुक्तानां यो दोषः स एव तदन्नस्यापि भुक्तस्य बोद्धव्यः॥ २२१॥

भुक्त्वातोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्।
मत्या भुक्त्वाचरेत्कृच्छ्रं रेतोविण्मूत्रमेव च॥ २२२॥

भुक्त्वेति॥ एषां मध्येऽन्यतमसंबन्ध्यन्नमज्ञानतो भुक्त्वा त्र्यहमुपवासः। ज्ञानतस्तु कृच्छ्रम्। एवं रेतोविण्मूत्रभोजनेऽपि। एतच्चान्यतमस्येति षष्ठी-निर्देशान्मत्तादिसंबन्धिनः परिग्रहदुष्टान्नस्यैव प्रायश्चित्तं न संसर्गदुष्टस्य केश-कीटावपन्नादेः। नापि कालदुष्टस्य पर्युषितान्नादेः। नापि निमित्तदुष्टस्य क्षुष्टादेः। एकप्रकरणोपदेशश्चैषां स्नातकत्वज्ञापनार्थम्। प्रायश्चित्तं चैतेष्वेकादशे वक्ष्यति।

---

१ अभोज्यं तु—कालदुष्टं, संसर्गदुष्टं, स्वभावदुष्टं, परिग्रहदुष्टं, चेति भेदेन चतुर्विधम्; तत्र कालदुष्टं पर्युषितशुक्तादिकम्; संसर्गदुष्टं मदिरादिकम्, स्वभावदुष्टं पलाण्डुलशुन-कलञ्जादिकम्; परिग्रहदुष्टं च प्रकृताभोज्यान्नादिकमिति केचिदाहुः।

यदि तु सर्वेष्वेवं प्रायश्चित्तं स्यात्तदा भुक्त्वातोऽन्यतमस्यान्नं दुष्टमित्यभ्यधास्यत्। नत्वन्यतमस्य तु भुक्त्वेति। 'तस्मादेकप्रकरणाद्यन्मेधातिथिरभ्यधात्। प्रायश्चित्तमिदं युक्तं शुक्तादौ तदसुन्दरम् ॥' अप्रकरणे च प्रायश्चित्तस्याभिधानं लाघवार्थम्। तत्र क्रियमाणे मत्तादिग्रहणमपि कर्तव्यं स्यात् ॥ २२२ ॥

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥ २२३ ॥

नाद्यादिति ॥ अविशेषेण शूद्रान्नं प्रतिषिद्धं तस्येदानीं विशिष्टविषयतोच्यते। अश्राद्धिनः श्राद्धादिपञ्चयज्ञशून्यस्य शूद्रस्य शास्त्रविद्द्विजः पक्वान्नं न भुञ्जीत, किंत्वन्नान्तराभावे सत्येकरात्रनिर्वाहोचितमाममेवान्नमस्माद्गृह्णीयान्न तु पक्वान्नम् ॥ २२३ ॥

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ २२४ ॥

श्रोत्रियस्येति ॥ एकोऽधीतवेदः कृपणश्च, परो दाता वृद्धिजीवी च; तयोरुभयोरपि गुणदोषवत्त्वं विचार्य देवास्तुल्यमन्नमनयोरिति निरूपितवन्तः। उभयोरपि गुणदोषसाम्यात् ॥ २२४ ॥

तान्प्रजापतिराहैत्य मा कृढ्वं विषमं समम्।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ २२५ ॥

तानिति ॥ तान्देवानागत्य ब्रह्मा प्रोवाच विषममन्नं मा समं कुरुत। विषमसमीकरणमनुचितम्। कः पुनरनयोर्विशेष इत्यपेक्षायां स एवावोचत्। दानशीलवार्धुषिकस्यापि श्रद्धयान्नं पवित्रं भवति। कृपणान्नं पुनरश्रद्धया हतं दूषितमधमम्। प्रागुभयप्रतिषेधेऽपि श्रद्धादत्तविद्वद्वार्धुषिकान्नविशुद्धिबोधनपरमिदम् ॥ २२५ ॥

अत एवाह—

श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥ २२६ ॥

श्रद्धयेति ॥ इष्टमन्तर्वेदि यज्ञादिकर्म, पूर्तं ततोऽन्यत्पुष्करिणीकूपप्रपारामादि, तदेतदनलसः सन्नित्यं काम्यस्वर्गादिफलरहितं श्रद्धया कुर्यात्। यस्मात्ते इष्टापूर्ते न्यायार्जितधनेन श्रद्धया कृतेऽक्षये मोक्षफले भवतः ॥ २२६ ॥

दानधर्मं निषेवेत नित्यमैष्टिकपौर्तिकम्।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ २२७ ॥

दानधर्ममिति ॥ दानाख्यं धर्ममैष्टिकं पौर्तिकमन्तर्वेदिकं बहिर्वेदिकं च

सर्वदा विद्यातपोयुक्तं ब्राह्मणमासाद्य परितुष्टान्तःकरणयुक्तः यथाशक्ति कुर्यात् ॥ २२७ ॥

यत्किंचिदपि दातव्यं याचितेनानसूयता[1] ।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥ २२८ ॥

यत्किंचिदिति ॥ प्रार्थितेन परगुणामत्सरेणाल्पमपि यथाशक्ति दातव्यम् । यस्मात्सर्वदा दानशीलस्य कदाचित्तादृशं पात्रमागमिष्यति तत्सर्वस्मान्नरकहेतोर्मोचयिष्यति ॥ २२८ ॥

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २२९ ॥

वारिद इति ॥ जलदः क्षुत्पिपासाविगमात्तृप्तिं, अन्नदोऽत्यन्तसुखं, तिलप्रद ईप्सितान्यपत्यादीनि, दीपदो विप्रवेश्मादौ निर्दोषं चक्षुः प्राप्नोति ॥ २२९ ॥

भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ २३० ॥

भूमिद इति ॥ भूमिदो भूमेराधिपत्यं, सुवर्णदश्चिरजीवित्वं, गृहदः श्रेष्ठानि वेश्मानि, रूप्यदः सकलजननयनमनोहरं रूपं लभते ॥ २३० ॥

वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ २३१ ॥

वासोद इति ॥ वस्त्रदश्चन्द्रसमानलोकान्प्राप्नोति चन्द्रलोके चन्द्रसमविभूतिर्वसति, एवमेवाश्विलोकं घोटकदः, बलीवर्दस्य दाता प्रचुरां श्रियं स्त्रीगवीप्रदः सूर्यलोकं प्राप्नोति ॥ २३१ ॥

यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥ २३२ ॥

यानशय्येति ॥ रथादियानस्य शय्यायाश्च दाता भार्यां, अभयप्रदः प्राणिनामहिंसकः प्रभुत्वं, धान्यदो व्रीहियवमाषमुद्गादिसस्यानां दाता चिरस्थायि सुखित्वं, ब्रह्म वेदस्तत्प्रदो वेदस्याध्यापको व्याख्याता च ब्रह्मणः सार्ष्टितां समानगतितां तत्तुल्यतां प्राप्नोति ॥ २३२ ॥

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥ २३३ ॥

सर्वेषामिति ॥ उदकान्नधेनुभूमिवस्त्रतिलसुवर्णघृतादीनां सर्वेषामेव यानि दानानि तेषां मध्यात् वेददानं विशिष्यते प्रकृष्टफलदं भवति ॥ २३३ ॥

---

पाठा०—1 °नानसूयया.

येन येन तु भावेन यद्यद्दानं प्रयच्छति ।
तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥ २३४ ॥

येन येनेति ॥ अवधारणे तुशब्दः । येन येनैव भावेनाभिप्रायेण फलाभिसंधिकः स्वर्गो मे स्यादिति, मुमुक्षुर्मोक्षाभिप्रायेण निष्कामो यद्यद्दानं ददाति तेनैव भावेनोपलक्षितस्तत्तद्दानफलद्वारेण जन्मान्तरे पूजितः सन् प्राप्नोति ॥ २३४ ॥

योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ २३५ ॥

योऽर्चितमिति ॥ योऽर्चापूर्वकमेव दाता ददाति, यश्च प्रतिग्रहीताऽर्चापूर्वकमेव दत्तं प्रतिगृह्णाति तावुभौ स्वर्गं गच्छतोऽनर्चितदानप्रतिग्रहणे नरकम् । पुरुषार्थे तु प्रतिग्रहेऽनर्चितमेव मया ग्रहीतव्यं नान्यथेति नियमात्फललाभो न विरुद्धः ॥ २३५ ॥

न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम् ।
नार्तोऽप्यपवदेद्विप्रान्न दत्त्वा परिकीर्तयेत् ॥ २३६ ॥

न विस्मयेतेति ॥ चान्द्रायणादितपसा कृतेन 'कथं ममेदं दुष्करमनुष्ठितम्' इति विस्मयं न कुर्यात् । यागं च कृत्वा नासत्यं वदेत् । कृतेऽपि पुरुषार्थतयानृतवदननिषेधे क्रत्वर्थोऽयं पुनर्निषेधः । ब्राह्मणैः पीडितोऽपि न तान्निन्देत् । गवादिकं च दत्त्वा 'मयेदं दत्तम्' इति परस्य न कथयेत् ॥ २३६ ॥

यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥ २३७ ॥

यज्ञ इति ॥ अनृतेन हेतुना यज्ञः क्षरति । सत्येनैव स फलं साधयति । एवं तपसि दाने च योज्यम् । विप्रनिन्दया चायुः क्षीयते ॥ २३७ ॥

धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २३८ ॥

धर्ममिति ॥ सर्वप्राणिनां पीडां परिहरन् परलोकसहायार्थं यथाशक्ति शनैःशनैर्धर्ममनुतिष्ठेत् । यथा पुत्तिकाः पिपीलिकाप्रभेदाः शनैःशनैर्महान्तं मृत्तिकाकूटं संचिन्वन्ति ॥ २३८ ॥

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ २३९ ॥

नामुत्रेति ॥ यस्मात्परलोके सहायकार्यसिद्ध्यर्थं न पितृमातृपत्नीज्ञातय-

---

पाठा०—1 पुत्रदारं.

क्लिश्यन्ति किंतु धर्म एवैकोऽद्वितीयभावेनोपकारार्थमवतिष्ठते । तस्मात्पुत्रादिभ्योऽपि महोपकारकं धर्ममनुतिष्ठेत् ॥ २३९ ॥

एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २४० ॥

एक इति ॥ एक एव प्राण्युत्पद्यते न बान्धवैः सहितः । एक एव च म्रियते । सुकृतफलमपि स्वर्गादिकं, दुरितफलं च नरकादिकमेक एव भुङ्क्ते न मात्रादिभिः सह । तस्मान्मात्राद्यपेक्षयापि धर्मं न त्यजेत् ॥ २४० ॥

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ २४१ ॥

मृतमिति ॥ मृतं शरीरं मनःप्राणादित्यक्तं लोष्टवदचेतनं भूमौ त्यक्त्वा पराङ्मुखा बान्धवा यान्ति न मृतं जीवमनुयान्ति, धर्मस्तु तमनुगच्छति ॥२४१॥

तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ २४२ ॥

तस्मादिति ॥ यस्माद्धर्मेण सहायेन दुस्तरं तमो नरकादिदुःखं तरति तस्माद्धर्मं सहायभावेन सततं शनैरनुतिष्ठेत् ॥ २४२ ॥

धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥ २४३ ॥

धर्मप्रधानमिति ॥ धर्मपरं पुरुषं दैवादुपजाते पापे प्राजापत्यादितपोरूपप्रायश्चित्तेन हतपापं दीप्तिमन्तं प्रकृतो धर्म एव शीघ्रं ब्रह्म स्वर्गादिरूपं परलोकं नयति । 'खं ब्रह्म' (छां. उ. ४।१०।५) इत्याद्युपनिषत्सु खशब्दस्य ब्रह्मणि प्रयोगः । खशरीरिणं ब्रह्मस्वरूपमित्यर्थः । यद्यपि लिङ्गशरीरावच्छिन्नो जीव एव गच्छति तथापि ब्रह्मांशत्वाद्ब्रह्मस्वरूपमुपपन्नं, धर्म एव चेत्परं लोकं नयति ततो धर्ममनुतिष्ठेत् । 'नहि वेदाः स्वधीतास्तु शास्त्राणि विविधानि च । तत्र गच्छन्ति यत्रास्य धर्म एकोऽनुगच्छति' ॥ २४३ ॥

उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ २४४ ॥

उत्तमैरिति ॥ कुलमुत्कर्षं नेतुमिच्छन् विद्याचारजन्मादिभिरुत्कृष्टैः सह सर्वदा कन्यादानादिसंबन्धानाचरेत् । अपकृष्टांस्तु संबन्धांस्त्यजेत् । उत्तमविधानादेवाधमपरित्यागे सिद्धे यत्पुनः 'अधमांस्त्यजेत्' इत्यभिधानं तदुत्तमासंभवे स्वतुल्याद्यनुज्ञानार्थम् ॥ २४४ ॥

पाठा०—1 स्वशरीरिणम् (=विभुस्वरूपं).

उत्तमानुत्तमान्गच्छन्हीनान् हीनांश्च वर्जयन्[1] ।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥ २४५ ॥

उत्तमानिति ॥ उत्तमान्गच्छंस्तैः सह संबन्धं कुर्वन्ब्राह्मणः श्रेष्ठतां गच्छति। प्रत्यवायेन विपरीताचारेण हीनैः सह संबन्धे जातेरपकर्षतया शूद्रतुल्यतामेति ॥ २४५ ॥

दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन् ।
अहिंस्रो दमदानाभ्यां जयेत्स्वर्गं तथाव्रतः ॥ २४६ ॥

दृढकारीति ॥ प्रारब्धसंपादयिता दृढकारी मृदुरनिष्ठुरः। दमस्य पृथगुपादानाद्दान्त इति शीतातपादिद्वन्द्वसहिष्णुर्ग्रहीतव्यः । क्रूराचारैः पुरुषैः संसर्गं परिहरन्, परहिंसानिवृत्तः, तथाव्रत एव नियमदमेन्द्रियसंयमाख्येन च दानेन स्वर्गं प्राप्नोति ॥ २४६ ॥

एधोदकं मूलफलमन्नमभ्युद्यतं च यत् ।
सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥ २४७ ॥

एधोदकमिति ॥ काष्ठजलफलमूलमधूनि अन्नं चाभ्युद्यतमयाचितोपनीतम्। 'अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः' ( याज्ञ. स्मृ. आचार. १।२१५ ) इति याज्ञवल्क्यवचनात् कुलटादिवर्जं सर्वतः शूद्रादिभ्योऽपि प्रतिगृह्णीयात्। 'आममेवाददीतास्मात्' ( ४।२२३ ) इत्युक्तत्वादामान्नमेव शूद्रात्प्रतिग्राह्यम्। अभयं चात्मत्राणात्मकं प्रीतिहेतुत्वाद्दक्षिणातुल्यं चण्डालादिभ्योऽपि स्वीकुर्यात् ॥ २४७ ॥

आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम् ।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्मणः ॥ २४८ ॥

आहृताभ्युद्यतामिति ॥ आहृतां संप्रदानदेशमानीताम्। अभ्युद्यतामाभिमुख्येन स्थापिताम्। अप्रचोदितां प्रतिग्रहीत्रा स्वयमन्यमुखेन वा पूर्वमयाचितां दात्रा च 'तुभ्यमिदं ददानि' इति पूर्वमकथितां हिरण्यादिभिक्षां नतु सिद्धान्नरूपाम्। 'अन्नमभ्युद्यतं च' ( ४।२४७ ) इत्युक्तत्वात् पापकारिणोऽपि पतितादिवर्जं ग्राह्यमिति विरिञ्चिरमन्यत ॥ २४८ ॥

नाश्नन्ति पितरस्तस्य दश वर्षाणि पञ्च च ।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते ॥ २४९ ॥

नाश्नन्तीति ॥ तेनोपकल्पितं श्राद्धेषु कव्यं पञ्चदश वर्षाणि पितरो न भुञ्जते। नच यज्ञेषु तेन दत्तं पुरोडाशादि हव्यमग्निर्वहति देवान्प्रापयति यस्तां भिक्षां न स्वीकरोति ॥ २४९ ॥

---

पाठा०—1 °नुत्तमानेव गच्छन्हीनांस्तु वर्जयन्.

शय्यां गृहान्कुशान्गन्धानपः पुष्पं मणीन्दधि ।
धाना मत्स्यान्पयो मांसं शाकं चैव न निर्णुदेत् ॥ २५० ॥

शय्यामिति ॥ गन्धान्गन्धवन्ति कर्पूरादीनि, धानाः भ्रष्टयवतण्डुलान्, पयः क्षीरं, पूर्वमाहरणोपायनिबन्धेन गवादीनामप्रत्याख्यानमुक्तं, शय्यादीनि त्वयाचिताहृतान्यपि दात्रा स्वगृहस्थितान्ययाचितोपकल्पितानि न प्रत्याचक्षीत ॥ २५० ॥

गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् ।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ २५१ ॥

गुरूनिति ॥ मातापित्रादीन्गुरून्भृत्यांश्च भार्यादीन् क्षुधावसन्नानुद्धर्तुमिच्छन् पतितादिवर्जं सर्वतः शूद्रादेरसाधुभ्यश्च प्रतिगृह्णीयात्; नतु तेन धनेन स्वयं वर्तेत ॥ २५१ ॥

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन् ।
आत्मनो वृत्तिमन्विच्छन्गृह्णीयात्साधुतः सदा ॥ २५२ ॥

गुरुष्विति ॥ मातापित्रादिषु मृतेषु तैर्वा जीवद्भिरपि स्वयोगावस्थितैर्विना गृहान्तरे वसन्नात्मनो वृत्तिमन्विच्छन् सर्वदा साधुभ्यो गृह्णीयादेव ॥२५२॥

आर्धिकः कुलमित्रं च गोपालो दासनापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥ २५३ ॥

आर्धिक इति ॥ आर्धिकः कार्षिकः । संबन्धिशब्दाश्चैते । यो यस्य कृषिं करोति स तस्य भोज्यान्नः । एवं स्वकुलस्य मित्रं, यो यस्य गोपालः, यो यस्य दासः, यो यस्य नापितः कर्म करोति, यो यस्मिन्नात्मानं निवेदयति 'दुर्गतिरहं त्वदीयसेवां कुर्वन्निति च त्वत्समीपे वसामि' इति यः शूद्रस्तस्य भोज्यान्नः २५३

यथात्मनिवेदनं शूद्रेण कर्तव्यं तदाह—

यादृशोऽस्य भवेदात्मा यादृशं च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥ २५४ ॥

यादृश इति ॥ अस्य शूद्रस्य कुलशीलादिभिर्यादृश आत्मा स्वरूपं यच्चास्य कर्म कर्तुरीप्सितं, यथा चानेन सेवा कर्तव्या तेन प्रकारेणात्मानं कथयेत् ॥ २५४ ॥

योऽन्यथासन्तमात्मानमन्यथा सत्सु भाषते ।
स पापकृत्तमो लोके स्तेन आत्मापहारकः ॥ २५५ ॥

योऽन्यथेति ॥ य इति सामान्यनिर्देशात्प्रकृतशूद्रादन्योऽपि यः कश्चित् कुलादिभिरन्यथाभूतमात्मानमन्यथा साधुषु कथयति स लोकेऽतिशयेन पापकारी चौरः यस्मादात्मापहारकः । स्तेनो द्रव्यान्तरमपहरति, अयं तु सर्वप्रधानमात्मानमेवापहरेत् ॥ २५५ ॥

वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तां तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥ २५६ ॥

वाच्यर्था इति ॥ सर्वेऽर्थाः शब्देषु नियता वाच्यत्वेन नियताः वाङ्मूलाश्च शब्दास्तेषां प्रतिपत्तौ शब्देभ्य एव प्रतीयन्ते प्रतीतिद्वारेण शब्दमूलत्वं शब्देभ्य एवावगम्य चानुष्ठीयन्त इति वाग्विनिर्गता इत्युच्यन्ते। अत एव 'वेदशब्देभ्य एवादौ' ( १।२१ ) इति ब्रह्मणोऽपि सृष्टिर्वेदशब्दमूलैवोक्ता। अतो यस्तां वाचं स्तेनयेत्स्वार्थव्यभिचारिणीं वाचयति स नरः सर्वार्थस्तेयकृद्भवति ॥ २५६ ॥

महर्षिपितृदेवानां गत्वानृण्यं यथाविधि ।
पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्यमाश्रितः ॥ २५७ ॥

महर्षीति ॥ गृहस्थस्यैव संन्यासप्रकारोऽयमुच्यते। महर्षीणां स्वाध्यायेन, पितॄणां पुत्रोत्पादनेन, देवतानां यज्ञैर्यथाशास्त्रमानृण्यं गत्वा योग्यपुत्रे सर्वं कुटुम्बचिन्ताभारमारोप्य माध्यस्थ्यमाश्रितः पुत्रदारधनादौ त्यक्तममत्वो ब्रह्मबुद्ध्या सर्वत्र समदर्शनो गृह एव वसेत् ॥ २५७ ॥

एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः ।
एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति ॥ २५८ ॥

एकाकीति ॥ काम्यकर्मणां धनार्जनस्य च कृतसंन्यासः षष्ठाध्याये वक्ष्यमाणः पुत्रोपकल्पितवृत्तिरेकाकी निर्जनदेशे आत्महितं जीवस्य ब्रह्मभावं वेदान्तोक्तं सर्वदा ध्यायेत् । यस्मात्तद्ध्यायन्ब्रह्मसाक्षात्कारेण परं श्रेयो मोक्षलक्षणं प्राप्नोति ॥ २५८ ॥

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः ॥ २५९ ॥

एषेति ॥ अयमध्यायार्थोपसंहारः। एषा ऋतादिवृत्तिर्गृहस्थस्य ब्राह्मणस्योक्ता। शाश्वती नित्या। आपदि त्वनित्या वक्ष्यते। स्नातकव्रतविधिश्च सत्त्वगुणस्य वृद्धिकरणे प्रशस्त उक्तः ॥ २५९ ॥

अनेन विप्रो वृत्तेन वर्तयन्वेदशास्त्रवित् ।
व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥ २६० ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां चतुर्थोऽध्यायः ॥ ४ ॥

अनेनेति ॥ सर्वस्योक्तस्य फलकथनमिदम् । अनेन शास्त्रोक्ताचारेण वेदविद्ब्राह्मणो वर्तमानो नित्यकर्मानुष्ठानात्क्षीणपापः सन् ब्रह्मज्ञानप्रकर्षेण ब्रह्मैव लोकस्तस्मिँल्लीनो महिमानं सर्वोत्कर्षं प्राप्नोति ॥ २६० ॥

इति श्रीकुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ५

**श्रुत्वैतानृषयो धर्मान्स्नातकस्य यथोदितान् ।**
**इदमूचुर्महात्मानमनलप्रभवं भृगुम् ॥ १ ॥**

श्रुत्वैतानिति ॥ ऋषयः स्नातकस्यैतान्यथोदितधर्माञ्छ्रुत्वा महात्मानं परमार्थपरं भृगुमिदं वचनमब्रुवन् । यद्यपि प्रथमाध्याये दशप्रजापतिमध्ये 'भृगुं नारदमेव च' (१।३५) इति भृगुसृष्टिरपि मनुत एवोक्ता तथापि कल्पभेदेनाग्निप्रभवत्वमुच्यते । तथा च श्रुतिः—'तस्य यद्रेतसः प्रथमं देदीप्यते तदसावादित्योऽभवद्यद्द्वितीयमासीद्भृगुः' इति । अत एव अष्टाद्रेतस उत्पन्नत्वाद्भृगुः॥१॥

**एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम् ।**
**कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ! ॥ २ ॥**

एवमिति ॥ एवं यथोक्तं स्वधर्मं कुर्वतां ब्राह्मणानां श्रुतिशास्त्रज्ञानां वेदोदितायुषः पूर्वं कथं मृत्युः प्रभवति ? आयुरल्पत्वहेतोरधर्माचरणस्याभावात् । सकलसंशयोच्छेदनसमर्थत्वात् प्रभो इति संबोधनम् ॥ २ ॥

**स तानुवाच धर्मात्मा महर्षीन्मानवो भृगुः ।**
**श्रूयतां येन दोषेण मृत्युर्विप्राञ्जिघांसति ॥ ३ ॥**

स तानिति ॥ स मनोः पुत्रो भृगुर्धर्मस्वभावो येन दोषेणाल्पकाले विप्रान्हन्तुमिच्छति मृत्युः स दोषः श्रूयतामित्येवं तान्महर्षीनगाद ॥ ३ ॥

**अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।**
**आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥ ४ ॥**

अनभ्यासेनेति ॥ वेदानामनभ्यासात्, स्वीयाचारपरित्यागात् सामर्थ्ये सत्यवश्यकर्तव्यकरणानुत्साहलक्षणादालस्यात् अदनीयदोषाच्च मृत्युर्विप्रान् हन्तुमिच्छति । एतेषामधर्मोत्पादनद्वारेणायुःक्षयहेतुत्वात् ॥ ४ ॥

वेदानभ्यासादेरुक्तत्वादनुक्तमन्नदोषमाह—

**लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।**
**अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥ ५ ॥**

लशुनमिति ॥ लशुनगृञ्जनपलाण्ड्वाख्यानि त्रीणि स्थूलकन्दशाकानि, कवकं छत्राकं, अमेध्यप्रभवाणि विष्ठादिजातानि तन्दुलीयादीनि । द्विजातीनामिति याज्ञवल्क्यवचनादेतानि द्विजातीनामभक्ष्याणि । द्विजातिग्रहणं शूद्रपर्युदासार्थम् ॥ ५ ॥

---

पाठा०—1 अष्टाद्रेतसः प्रथममुददीप्यत तदसावादित्यो°.

**लोहितान्वृक्षनिर्यासान्[1]व्रश्चनप्रभवांस्तथा ।**
**शेलुं गव्यं च [2]पेयूषं प्रयत्नेन विवर्जयेत् ॥ ६ ॥**

लोहितानिति ॥ लोहितवर्णान्वृक्षनिर्यासान्वृक्षान्निर्गतरसान् कठिनतां यातान्व्रश्चनं छेदनं तत्प्रभवानलोहितानपि । तथा च तैत्तिरीयश्रुतिः—'अथो खलु य एव लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य' इति । शेलुं बहुवारकफलं, गोभवं [१]पेयूषं नवप्रसूताया गोः क्षीरमग्निसंयोगात्कठिनं भवत्येतान्यत्नतस्त्यजेत् । 'अनिर्दशाया गोः क्षीरम्' (५।८) इत्यनेनैव पेयूषस्यापि निषेधसिद्धावधिकदोषत्वात् प्रायश्चित्तगौरवज्ञापनार्थं पृथङ्निर्देशः । अत एव यत्नत इत्युक्तम् ॥ ६ ॥

**वृथाकृसरसंयावं पायसापूपमेव च ।**
**अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ ७ ॥**

वृथाकृसरेति ॥ देवताद्यनुद्देशेनात्मार्थं यत्पच्यते तद्वृथा । कृसरस्तिलेन सह सिद्ध ओदनः । तथा च छन्दोगपरिशिष्टम्—'तिलतण्डुलसंपक्वः कृसरः सोऽभिधीयते' । संयावो घृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्करिकेति प्रसिद्धः । क्षीरतण्डुलमिश्रः पायसः । अपूपः पिष्टकः । एतान्वृथापक्वान् विवर्जयेत् । पशुयागादौ मन्त्रबहुलेन पशोः स्पर्शनमुपाकरणं तद्रहितः पशुरनुपाकृतस्तस्य मांसानि । देवान्नानि नैवेद्यार्थमन्नानि प्राङ्निवेदनात्, हवींषि च पुरोडाशादीनि होमात्प्राग्वर्जयेत् । 'अनुपाकृतमांसानि' इत्येतद्विशेषनिषेधदर्शनात् 'अनर्चितं वृथामांसम्' (४।२१३) इति सामान्यनिषेधो गोबलीवर्दन्यायेनानुपाकृतमांसेतरश्राद्धाद्यनुद्देश्यमांसभक्षणे पर्यवस्यति ॥ ७ ॥

**अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा ।**
**आविकं संधिनीक्षीरं विवत्सायाश्च गोः पयः ॥ ८ ॥**

अनिर्दशाया इति ॥ प्रसूताया अनिर्दशाया गोर्दुग्धम् । गोरिति पेयक्षीरपशूपलक्षणार्थम् । तेन अजामहिष्योरपि दशाहमध्ये प्रतिषेधः । तथा च यमः—'अनिर्दशाहं गोक्षीरमाजं माहिषमेव च' । तथोष्ट्रभवं, अश्वाद्येकखुरसंबन्धि, मेषभवं, संधिनी या ऋतुमती वृषमिच्छती तस्याः क्षीरम् । तथा च हारीतः—'संधिनी वृषस्यन्ती तस्याः पयो न पिबेदृतुमत्तद्भवति' । विवत्साया मृतवत्सायाः असन्निहितवत्सायाश्च क्षीरं वर्जयेत् । धेन्वधिकरणन्यायेन वत्सग्रहणादेव गवि लब्धायां पुनर्गोग्रहणं गोरेव न त्वजामहिष्योरिति ज्ञापनार्थम् ॥८॥

**आरण्यानां च सर्वेषां मृगाणां माहिषं विना ।**
**स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥ ९ ॥**

आरण्यानामिति ॥ 'मृग'शब्दोऽत्र महिषपर्युदासात्पशुमात्रपरः । माहिषं

---

पाठा०—1 वृश्चनप्रभवांस्तथा. 2 पीयूषं.

---

१ 'सप्तरात्रप्रसूतायाः क्षीरं पेयूषमुच्यते' इति हारावल्यामुक्तम्; 'पीयूष'पाठेऽपि स एवार्थो ज्ञेयः । २ सायंप्रातःप्रदुग्धा यथाकथमप्यन्यस्मिन्दुह्यते, प्रातरप्राप्तदोहा वा सायं दुह्यते स्वल्पदुग्धत्वादेकदैव सा 'सन्धिनी' इति केचिदाहुः ।

क्षीरं वर्जयित्वा सर्वेषामारण्यप्रभवपशूनां हस्त्यादीनां क्षीरं स्त्रीक्षीरं च सर्वाणि शुक्तानि वर्जनीयानि । स्वभावतो मधुररसानि यानि कालवशेनोदकादिना चाम्लीभवन्ति तानि 'शुक्त'शब्दवाच्यानि । 'शुक्तं पर्युषितं चैव' (४।२११) इति चतुर्थे कृतेऽपि शुक्तप्रतिषेधे दध्यादिप्रतिप्रसवार्थं पुनरिहोच्यते ॥ ९ ॥

दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् ।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥ १० ॥

दधि भक्ष्यं चेति ॥ शुक्तेषु मध्ये दधि भक्ष्यं दधिसंभवं च सर्वं तक्रादि । यानि तु पुष्पमूलफलैरुदकेन संधीयन्ते तानि भक्षणीयानि । शुभैरिति विशेषणोपादानान्मोहादिविकारकारिभिः कृतसंधानस्य प्रतिषेधः । तथा च बृहस्पतिः 'कन्दमूलफलैः पुष्पैः शस्तैः शुक्तान्न वर्जयेत् । अविकारि भवेद्भक्ष्यमभक्ष्यं तद्विकारकृत्' ॥ १० ॥

क्रव्यादाञ्छकुनान्सर्वांस्तथा ग्रामनिवासिनः[1] ।
अनिर्दिष्टांश्चैकशफांष्टिट्टिभं च विवर्जयेत् ॥ ११ ॥

क्रव्यादानिति ॥ आमं मांसं ये भक्षयन्ति ते क्रव्यादास्तान्सर्वान्गृध्रादीन्पक्षिणो वर्जयेत् । तथा ग्रामनिवासिनश्च पक्षिणः पारावतादीन् । तथा श्रुतौ केचिदेकशफा भक्ष्यत्वेन निर्दिष्टाः । तथा च 'औष्ट्रं वाडवमालभेत तस्य च मांसमश्नीयात्' इति । केचिच्चानिर्दिष्टा रासभादयस्तेषां मांसं वर्जयेत् । येऽपि यज्ञाङ्गत्वेन विहितास्तेषामपि यज्ञ एव मांसभक्षणं न सर्वदा । टिट्टिभाख्यं च पक्षिणं वर्जयेत् ॥ ११ ॥

कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम् ।
सारसं रज्जुदालं[2] च दात्यूहं शुकसारिके ॥ १२ ॥

कलविङ्कमिति ॥ कलविङ्कं चटकं तस्य ग्रामारण्योभयवासित्वादेव निषेधः । इत्यारण्यस्याप्यभक्ष्यत्वार्थं जाति(?)शब्देन निषेधः । प्लवाख्यं पक्षिणम् । तथा हंसचक्रवाकग्रामकुक्कुटसारसरज्जुदालदात्यूहशुकसारिकाख्यान्पक्षिणो वर्जयेत् । वक्ष्यमाणजालपादनिषेधेनैव हंसचक्रवाकयोरपि निषेधसिद्धौ पृथङ्निषेधोऽन्येषामापदि जालपादानां विकल्पार्थः । स च व्यवस्थितो विज्ञेयः । आपदि भक्ष्या न त्वनापदि । इच्छाविकल्पस्य रागत एव प्राप्तेः । ग्रामकुक्कुटे तु ग्रामग्रहणमारण्यकुक्कुटाद्यनुज्ञानार्थं न त्वेतद्व्यतिरिक्तग्रामवासिविकल्पार्थम् । आपदर्थे गतप्रयोजनं भवति । वाक्यान्तरगतविशेषावधारणपरत्वस्यान्याय्यत्वात् ॥ १२ ॥

प्रतुदाञ्जालपादांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान्सौनं[3] वल्लूरमेव च ॥ १३ ॥

प्रतुदानिति ॥ प्रतुद्य चञ्च्वा ये भक्षयन्ति तान्दार्वाघाटादीन्, जालपा-

पाठा०—1 क्रव्यादः शकुनीन्. 2 रज्जुवालं. 3 शौनं.

दानिति जालाकारपादाञ्शरारिप्रभृतीन्, कोयष्ट्याख्यं पक्षिणम्, नखविष्किरान्नखैर्विकीर्य ये भक्षयन्ति तानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्ताञ्श्येनादीन्। तथा निमज्य ये मत्स्यान्खादन्ति तान्मद्गुप्रभृतीन्, सूना मारणस्थानं तत्र स्थितं यन्मांसं भक्ष्यमपि, वल्लूरं शुष्कमांसं एतानि वर्जयेत् ॥ १३ ॥

**बकं चैव बलाकां च काकोलं खञ्जरीटकम्।**
**मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्वशः ॥ १४ ॥**

**बकं चैवेति** ॥ बकबलाकाद्रोणकाकखञ्जनान्, तथा मत्स्यादान्पक्षिव्यतिरिक्तानपि नक्रादीन्विड्वराहांश्च। विडिति विशेषणमारण्यसूकराभ्यनुज्ञानार्थम्। मत्स्यांश्च सर्वान्विवर्जयेत् ॥ १४ ॥

मत्स्यभक्षणनिन्दामाह—

**यो यस्य मांसमश्नाति स तन्मांसाद उच्यते।**
**मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान्विवर्जयेत् ॥ १५ ॥**

**यो यस्येति** ॥ यो यदीयं मांसं खादति स तन्मांसाद एव परं व्यपदिश्यते। यथा मार्जारो मूषकादः। मत्स्यादः पुनः सर्वमांसभक्षकत्वेन व्यपदेष्टुं योग्यस्तस्मान्मत्स्यान्न खादेत् ॥ १५ ॥

इदानीं भक्ष्यमत्स्यानाह—

**पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः।**
**राजीवान्सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥ १६ ॥**

**पाठीनरोहिताविति** ॥ पाठीनरोहितौ मत्स्यभेदौ भक्षणीयौ। 'हव्यकव्ययोर्नियुक्तौ' इति समस्तवक्ष्यमाणभक्षणनिषिद्धोपलक्षणार्थम्। तेन प्राणात्ययादावदोषः। तथा राजीवाख्यान्सिंहतुण्डांश्च सशल्कांश्च सर्वान्वक्ष्यमाणलक्षणोपेतानद्यात्। मेधातिथि-गोविन्दराजौ तु—'पाठीनरोहितौ दैवपैत्रादिकर्मणि नियुक्तावेवादनीयौ न त्वन्यदा। राजीवसिंहतुण्डसशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्रापि भक्षणीयाः' इत्याचक्षतुः; न तन्मनोहरम्। पाठीनरोहितौ श्राद्धे नियुक्तौ श्राद्धभोक्त्रैव भक्षणीयौ नतु श्राद्धकर्त्रापि। राजीवादयो हव्यकव्याभ्यामन्यत्रापि भक्ष्या इत्यस्याप्रमाणत्वात्। मुन्यन्तरैश्च रोहितपाठीनराजीवादीनां तुल्यत्वेनाभिधानात्। तथा च शङ्खः (१७।२५)—'राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च। पाठीनरोहितौ चापि भक्ष्या मत्स्येषु कीर्तिताः'। याज्ञवल्क्यः (आचार.७।१७७)—'भक्ष्याः पञ्चनखाः श्वाविद्गोधाकच्छपशल्यकाः। शशश्च मत्स्येष्वपि तु सिंहतुण्डकरोहिताः। तथा पाठीनराजीवसशल्काश्च द्विजातिभिः'। हारीतः—'सशल्कान्मत्स्यान्यायोपपन्नान्भक्षयेत्'। एवं च 'भोक्त्रैवाद्यौ न कर्त्रापि श्राद्धे पाठीनरोहितौ। राजीवाद्यास्तथा नेति व्याख्या न मुनिसंमता' ॥ १६ ॥

---

**पाठा०**—1 राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः. 2 प्रचलितशङ्खस्मृतिपुस्तके तु—"दैतच्चैव न भक्षयेत्। राजीवान्सिंहतुंडांश्च शकुलांश्च तथैव च। पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्तितौ' इति पाठ उपलभ्यते।

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्।
भक्ष्येष्वपि समुद्दिष्टान्सर्वान्पञ्चनखांस्तथा ॥ १७ ॥

न भक्षयेदिति ॥ ये एकाकिनः प्रायेण चरन्ति सर्पादयस्तानेकचरान्, तथा ये अभियुक्तैरपि नामजातिभेदेनावधार्य विभागतश्च मृगपक्षिणो न ज्ञायन्ते तान्। 'भक्ष्येष्वपि समुद्दिष्टान्' इति सामान्यविशेषनिषेधाभावेन भक्ष्यपक्षनिक्षिप्तान्भक्ष्यत्वेन समुद्दिष्टांश्च, तथा सर्वान्पञ्चनखान्वानरादीन्न भक्षयेत् ॥ १७ ॥

अत्र प्रतिप्रसवमाह—

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा।
भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥ १८ ॥

श्वाविधमिति ॥ श्वाविधं सेधाख्यं प्राणिभेदं, शल्यकं तत्सदृशं स्थूललोमानं, तथा गोधागण्डककच्छपशशान् पञ्चनखेषु भक्ष्यान् मन्वादयः आहुः। तथोष्ट्रवर्जितानेकदन्तपङ्क्त्युपेतान् ॥ १८ ॥

छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥ १९ ॥

छत्राकमिति ॥ कवकग्रामसूकरलशुनादीनामन्यतमं बुद्धिपूर्वकं गुरुप्रायश्चित्तोपदेशादभ्यासतो भक्षयित्वा द्विजातिः पतति। ततश्च पतितप्रायश्चित्तं कुर्यात्। 'गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्' (११।५६) इति ॥१९॥

अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्।
यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ २० ॥

अमत्येति ॥ एतानि छत्राकादीनि षड् बुद्धिपूर्वकमेव भक्षयित्वाऽभिधेयभक्षणस्य निमित्तत्वेन साहित्यस्याविवक्षितत्वात्। एकादशाध्यायवक्ष्यमाणस्वरूपं सप्ताहसाध्यं सान्तपनं यतिचान्द्रायणं वा चरेत्। एतद्व्यतिरिक्तेषु लोहितवृक्षनिर्यासादिषु प्रत्येकं भक्षणादहोरात्रोपवासं कुर्यात्। छत्राकादीनां च प्रायश्चित्तापकर्षो वर्जनादरार्थः। 'शेषेषूपवसेदहः' इति लाघवार्थम्। तत्र हि क्रियमाणे लोहितनिर्यासग्रहणमपि कर्तव्यं स्यात् ॥ २० ॥

संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥ २१ ॥

संवत्सरस्येति ॥ 'द्विजोत्तम' पदं द्विजातिपरम्। त्रयाणां प्रकृतत्वात्, 'एतदुक्तं द्विजातीनाम्' (५।२६) इत्युपसंहाराच्च। द्विजातिः संवत्सरमध्ये एकमपि कृच्छ्रं प्रथमाम्नानात्प्राजापत्याख्यमज्ञातभक्षणदोषोपशमनार्थमनुतिष्ठेत्। ज्ञातस्य पुनरभक्ष्यभक्षणदोषस्य विशेषतो यत्र यद्विहितं तदेव प्रायश्चित्तं

कुर्यात् । यत्तु—'त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते' ( मनु. ५।१२७ ) इति, तद्द्रव्यशुद्धिप्रकरणपठितप्रायश्चित्तव्यतिरिक्तद्रव्यशुद्धिविशेषेऽवतिष्ठते ॥ २१ ॥

इदानीं भक्षणप्रसङ्गेन यागाद्यर्थं हिंसामप्यनुजानाति—

**यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।**
**भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥ २२ ॥**

यज्ञार्थमिति ॥ ब्राह्मणादिभिर्यागार्थं प्रशस्ताः शास्त्रविहिता मृगपक्षिणो वध्याः । भृत्यानां चावश्यभरणीयानां वृद्धमातापित्रादीनां संवर्धनार्थम् । यस्मादगस्त्यो मुनिः पूर्वं तथा कृतवान् । प्रकृतिरूपोऽयमनुवादः ॥ २२ ॥

**बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् ।**
**पुराणेष्वृषियज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ २३ ॥**

बभूवुरिति । यस्मात्पुरातनेष्वप्यृषिकर्तृकयज्ञेषु च भक्ष्याणां मृगपक्षिणां मांसेन पुरोडाशा अभवंस्तस्माद्यज्ञार्थमधुनातनैरपि मृगपक्षिणो वध्याः ॥२३॥

इदानीं पर्युषितप्रतिप्रसवार्थमाह—

**यत्किंचित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् ।**
**तत्पर्युषितमप्याद्यं हविःशेषं च यद्भवेत् ॥ २४ ॥**

यत्किंचिदिति ॥ यत्किंचित्खरविशदमभ्यवहार्यं मोदकादि, भोज्यं पायसादि, अगर्हितमुपघातान्तररहितं तत्पर्युषितं रात्र्यन्तरितमपि घृततैलदध्यादिसंयुक्तं कृत्वा भक्षणीयम् । ननु प्रागेव यत्स्नेहसंयुक्तं तत्पर्युषितं भक्षणीयमिति व्याख्येयम् । तथा च सति हविःशेषस्य स्नेहसंयोगावश्यंभावात् 'यत्किंचित्स्नेहसंयुक्तं' इत्यनेनैव भक्षणे सिद्धे 'हविःशेषं च यद्भवेत्' इत्यनर्थकं स्यात् । स्मृत्यन्तरेऽपि भक्षणकाल एवाभिघारणमुपदिश्यते । तथा च यमः—'मसूरमाषसंयुक्तं तथा पर्युषितं च यत् । तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्' । हविःशेषं तु चरुपुरोडाशादि पर्युषितमपि भोजनकाले स्नेहसंयोगशून्यमेव भक्षणीयम्, पृथगुपदेशात् ॥ २४ ॥

**चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ।**
**यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥ २५ ॥**

चिरस्थितमिति ॥ अनेकरात्र्यन्तरिता अपि यवगोधूमदुग्धविकाराः स्नेहसंयोगरहिता अपि द्विजातिभिर्भक्षणीयाः ॥ २५ ॥

**एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः ।**
**मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने ॥ २६ ॥**

एतदुक्तमिति ॥ एतद्द्विजातीनां भक्ष्याभक्ष्यमुक्तम्, अत ऊर्ध्वं मांसस्य भक्षणे वर्जने च विधानं निःशेषं वक्ष्यामि ॥ २६ ॥

---

पाठा०—1 पुराणेष्वपि यज्ञेषु.

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥ २७ ॥

प्रोक्षितमिति ॥ 'प्रोक्षितं भक्षयेत्' इति परिसंख्या वा स्यान्नियमविधिर्वा । तत्र परिसंख्यात्वे प्रोक्षितादन्यन्न भक्षणीयमिति वाक्यार्थः स्यात् । स च 'अनुपाकृतमांसानि' (५।७) इत्यनेनैव निषेधात्प्राप्तः, तस्मान्मन्त्रकृतप्रोक्षणाख्य-संस्कारयुक्तयज्ञहुतपशुमांसभक्षणमिदं यज्ञाङ्गं विधीयते। अत एव 'असंस्कृता-न्पशून्मन्त्रैः' ( ५।३६ ) इत्यस्यानुवादं वक्ष्यति । ब्राह्मणानां च यदा कामना भवति तदावश्यं मांसं भोक्तव्यमिति तदापि नियमत एकवारं भक्षयेत् 'सकृद्ब्राह्मणकाम्यया' इति यमवचनात् । तथा श्राद्धे मधुपर्के च 'नामांसो मधुपर्कः' (१।२४) इति गृह्यवचनान्नियुक्तेन नियमान्मांसं भक्षणीयमिति । अत एव 'नियुक्तस्तु यथान्यायम्' ( ५।३५ ) इत्यतिक्रमदोषं वक्ष्यति । प्राणात्यये चाहारान्तराभावनिमित्तके व्याधिहेतुके वा नियमतो मांसं भक्षयेत् ॥ २७ ॥

प्राणात्यये मांसभक्षणानुवादमाह—

प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥ २८ ॥

प्राणस्यान्नमिति ॥ प्राणितीति प्राणो जीवः शरीरान्तर्गतो भोक्ता तस्याद-नीयं सर्वमिदं ब्रह्मा कल्पितवान् । किं तदाह—जंगमं पश्वादि, स्थावरं व्रीहि-यवादि सर्वं तस्य भोजनम् । तस्मात्प्राणधारणार्थं जीवो मांसं भक्षयेत् ॥२८॥

'प्राणस्यार्थ(न्न ?)मिदं सर्वम्' (५।२८) इत्येवं प्रपञ्चयति—

चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥ २९ ॥

चराणामिति ॥ जङ्गमानां हरिणादीनामजङ्गमास्तृणादयः, दंष्ट्रिणां व्याघ्रा-दीनां अदंष्ट्रिणो हरिणादयः, सहस्तानां मनुष्यादीनां अहस्ता मत्स्यादयः, शूराणां सिंहादीनां भीरवो हस्त्यादयोऽदनीयाः। एतादृश्यां विधातुरेव सृष्टौ२९

नात्ता दुष्यत्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च ॥ ३० ॥

नात्तेति ॥ भक्षयिता भक्षणार्हान्प्राणिनः प्रत्यहमपि भक्षयन्न दोषं प्राप्नोति । यस्माद्विधात्रैव भक्षणार्हा भक्षयितारश्च निर्मिता इति त्रिभिः श्लोकैः प्राणात्यये मांसभक्षणस्तुतिरियम् ॥ ३० ॥

अथ प्रोक्षितभक्षणनियमार्थवादमाह—

यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथाप्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥ ३१ ॥

यज्ञायेति ॥ यज्ञसंपत्त्यर्थं तदङ्गभूतमांसस्य जग्धिर्भक्षणमेतद्दैवमनुष्ठानं

उक्तव्यतिरिक्तप्रकारेण पुनरात्मार्थमेव पशुं व्यापाद्य तन्मांसभक्षणेषु प्रवृत्ती राक्षसोचितमनुष्ठानमित्युत्तरार्धं वृथामांसभक्षणनिवृत्त्यनुवादः ॥ ३१ ॥

क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ।
देवान्पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति ॥ ३२ ॥

क्रीत्वेति ॥ क्रीत्वा आत्मना चोत्पाद्य अन्येन वा केनाप्यानीय दत्तं मांसं देवपितृभ्यो दत्त्वा शेषं भक्षयन्न पापं प्राप्नोति । अतः प्रोक्षितादिचतुष्टय-भक्षणवन्नेदं नियतं भक्षणं 'न दुष्यति'(५।३०) इत्यभिधानात्'वर्षे वर्षेऽश्वमेधेन' (५।५३) इत्यादिवक्ष्यमाणमांसवर्जनविधिरप्येतद्विषय एवाविरोधात् ॥ ३२ ॥

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं प्रेतस्तैरद्यतेऽवशः[1] ॥ ३३ ॥

नाद्यादिति ॥ मांसभक्षणानुष्ठानदोषज्ञो द्विजातिरनापदि तत्तद्देवाद्यर्चन-विधानं विना न मांसं भक्षयेत् । यस्मादविधानेन यो मांसं खादति स मृतः सन् यन्मांसं भक्षितं तैः प्राणिभिः परलोके स्वरक्षणाक्षमः खाद्यत इति सर्वश्लोकानुवादः ॥ ३३ ॥

न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।
यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥ ३४ ॥

न तादृशमिति ॥ मृगवधजीविनो व्याधादेर्धननिमित्तं मृगाणां हन्तुर्न तथाविधं पापं भवति, यादृशमदेवपितृशेषभूतमांसानि खादतः परलोके भवतीति पूर्वानुवाद एव ॥ ३४ ॥

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम् ॥ ३५ ॥

नियुक्तस्त्विति ॥ श्राद्धे मधुपर्के च यथाशास्त्रं नियुक्तः सन् यो मनुष्यो मांसं न खादति स मृतः सन्नेकविंशतिजन्मानि पशुर्भवति । 'यथाविधि नियुक्तस्तु' (५।२७) इत्येतन्नियमातिक्रमफलविधानमिदम् ॥ ३५ ॥

असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः कदाचन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ ३६ ॥

असंस्कृतानिति ॥ वेदविहितमन्त्रवत्प्रोक्षणादिसंस्कारशून्यान्पशून् विप्रादिः कदाचिन्नाश्नीयात् । शाश्वतं प्रवाहानादितया नित्यं पशुयागादिविधि-मास्थितो मन्त्रसंस्कृतानेवाश्नीयादिति । 'प्रोक्षितं भक्षयेन्मांसम्' ( ५।२७ ) इत्येतस्यानुवादार्थमेतत् ॥ ३६ ॥

कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥ ३७ ॥

कुर्यादिति ॥ सङ्गे आसक्तौ पशुभक्षणानुरागेण घृतमयीं पिष्टमयीं वा

[illegible]—1 प्रेत्य तैरद्यते.

पशुप्रतिकृतिं कृत्वा खादेन्न पुनर्देवताद्युद्देशं विनैव पशून्कदाचिदपि हन्तुमिच्छेत् ॥ ३७ ॥

यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम्।
वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥ ३८ ॥

यावन्तीति ॥ देवताद्युद्देशमन्तरेणात्मार्थं यः पशून्हन्ति स वृथापशुघ्नो मृतः सन् यावत्संख्यानि पशुरोमाणि तावत्संख्याभूतं जन्मनि जन्मनि मारणं प्राप्नोति। तस्माद्वृथा पशुं न हन्यात्। तावत्कृत्व इति वत्वन्तात्क्रियाभ्यावृत्तिगणने कृत्वसुच् प्रत्ययः। इह हशब्द आगमप्रसिद्धिसूचनार्थः ॥ ३८ ॥

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा।
यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥ ३९ ॥

यज्ञार्थं पशव इति ॥ यज्ञसिद्ध्यर्थं प्रजापतिना आत्मनैवादरेण पशवः सृष्टाः। यज्ञश्चाग्नौ प्रास्ताहुतिन्यायात्[1] सर्वस्यास्य जगतो विवृद्ध्यर्थः। तस्माद्यज्ञे वधोऽवध एव; वधजन्यदोषाभावात् ॥ ३९ ॥

किंच,—

ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः[1] पुनः ॥ ४० ॥

ओषध्य इति ॥ ओषध्यो व्रीहियवाद्याः, पशवश्छागाद्याः, वृक्षा यूपाद्यर्थाः, तिर्यञ्चः कूर्मादयः, पक्षिणः कपिञ्जलाद्याः, यज्ञार्थं विनाशं गताः पुनर्जात्युत्कर्षं प्राप्नुवन्ति ॥ ४० ॥

मधुपर्के च यज्ञे च पितृदैवतकर्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥ ४१ ॥

मधुपर्के चेति ॥ 'नामांसो मधुपर्कः' (गृह्यसू. १।२४) इति विधानान्मधुपर्के च यज्ञे च ज्योतिष्टोमादौ, पित्र्ये दैवे च कर्मणि श्राद्धादौ पशवो हिंसनीया नान्यत्रेति मनुरभिहितवान् ॥ ४१ ॥

एष्वर्थेषु पशून्हिंसन्वेदतत्त्वार्थविद्द्विजः।
आत्मानं च पशुं चैव गमयत्युत्तमां गतिम् ॥ ४२ ॥

एष्वर्थेष्विति ॥ एषु मधुपर्कादिषु पदार्थेषु पशून्हिंसन्नात्मानं पशुं चोत्तमां गतिं स्वर्गाद्युपभोगयोग्यविलक्षणदेहदशादिसंबन्धं प्रापयति। 'वेदतत्त्वार्थवित्' इति विद्वदधिकारबोधनार्थम् ॥ नन्वन्याधिकारित्वे कर्मणि कथमनधिकृतस्य पश्वादेरुत्तमगतिप्राप्तिः फलम्? उच्यते,—शास्त्रप्रमाणकत्वात्। अस्यार्थस्य पित्रधिकारिकायां जातेष्टावनधिकारिणोऽपि पुत्रस्य फलप्राप्तिवदिहापि

पाठा०—1 °न्त्युत्सृतीः.

१ 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' (३।७६) इति श्लोकोक्तसरणीमनुसृत्येत्याशयः।

पश्वादिगतफलसंभवाद्यजमान एव कारुणिकतया पशुगतफलविशिष्टमेव फलं कामयिष्यति। अत एव 'आत्मानं च पशुं चैव' इत्यभिधानात् यजमानव्यापारादेव पशुगतफलसिद्धिरुक्ता ॥ ४२ ॥

**गृहे गुरावरण्ये वा निवसन्नात्मवान्द्विजः।**
**नावेदविहितां हिंसामापद्यपि समाचरेत् ॥ ४३ ॥**

गृहे गुरावरण्ये वेति ॥ गृहाश्रमे, ब्रह्मचर्याश्रमे, वानप्रस्थाश्रमे च प्रशस्तात्मा द्विजो निवसन्नापद्यपि नाशास्त्रीयां हिंसां समाचरेत् ॥ ४३ ॥

कथं तर्हि तुल्ये हिंसात्वे वैदिकी दैक्षादिपशुहिंसा नाधर्मायेत्यत आह—

**या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे।**
**अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥ ४४ ॥**

या वेदविहितेति ॥ या श्रुतिविहिता कर्मविशेषदेशकालादिनियताऽस्मिञ्जगति स्थावरजङ्गमात्मनि, अहिंसामेव तां जानीयात्, हिंसाजन्याधर्मविरहात्। दैक्षपशुहननमधर्मः, प्राणिहननत्वात् ब्राह्मणहननवदित्याद्यनुमानमुपजीव्य शास्त्रबाधादेव न प्रवर्तते। दृष्टान्तीकृतब्राह्मणहननस्याप्यधर्मत्वे शास्त्रमेवोपजीव्यम्। वेदाद्धर्मो हि निर्बभौ यस्मादनन्यप्रमाणको धर्मो वेदादेव निःशेषेण प्रकाशतां गतः ॥ ४४ ॥

**योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।**
**स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥ ४५ ॥**

योऽहिंसकानीति ॥ योऽनुपघातकान्प्राणिनः हरिणादीनात्मसुखेच्छया मारयति स इहलोके परलोके च न सुखेन वर्धते ॥ ४५ ॥

**यो बन्धनवधक्लेशान्प्राणिनां न चिकीर्षति।**
**स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥ ४६ ॥**

यो बन्धनेति ॥ यो बन्धनमारणक्लेशादीन्प्राणिनां कर्तुं नेच्छति स सर्वहितप्राप्तीच्छुरनन्तसुखं प्राप्नोति ॥ ४६ ॥

अन्यच्च,—

**यद्ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च।**
**तदवाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥ ४७ ॥**

यद्ध्यायतीति ॥ यच्चिन्तयति धर्मादिकमिदं मेऽस्त्विति, यच्च श्रेयःसाधनं कर्म करोति, यत्र च परमार्थध्यानादौ धृतिं बध्नाति, तत्सर्वमक्लेशेन लभते। य उपघातनिमित्तं दंशमशकाद्यपि न व्यापादयति ॥ ४७ ॥

पाठा०—1 रतिं ( =आसक्तिमभिलाषं वा).

मांसभक्षणप्रसङ्गेन हिंसागुणदोषावभिधाय पुनः प्रकृतमांसाभक्षणमाह—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ४८ ॥

नाकृत्वेति ॥ प्राणिहिंसाव्यतिरेकेण न क्वचिन्मांसमुत्पद्यते । प्राणिवधश्च न स्वर्गनिमित्तं नरकहेतुरेव यस्मात्तस्मादविधिना मांसं न भक्षयेदिति ॥ ४८ ॥

समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥ ४९ ॥

समुत्पत्तिं चेति ॥ शुक्रशोणितपरिणामात्मिकां समुत्पत्तिं घृणाकरीं विज्ञाय प्राणिनां वधबन्धौ च क्रूरकर्मरूपौ निरूप्य विहितमांसभक्षणादपि निवर्तेत किमुताविहितमांसभक्षणादित्यविधिना मांसभक्षणनिन्दानुवादः ॥ ४९ ॥

न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥ ५० ॥

न भक्षयतीति ॥ उक्तविधिव्यतिरेकेण यो न मांसं भक्षयति । पिशाचवदिति । यथा पिशाचो भक्षयति तथा नेति व्यतिरेके दृष्टान्तः । स लोकस्य प्रियो भवति, रोगैश्च न बाध्यते । तस्मादवैधमांसभक्षणाद्व्याधयो भवन्तीति दर्शितम् ॥ ५० ॥

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ ५१ ॥

अनुमन्तेति ॥ यदनुमतिव्यतिरेकेण हननं कर्तुं न शक्यते सोऽनुमन्ता, विशसिता अङ्गानि यः कर्तर्यादिना पृथक्पृथक् करोति, क्रयविक्रयी मांसस्य क्रेता विक्रेता च, संस्कर्ता पाचकः, उपहर्ता परिवेषकः, खादको भक्षयिता । गोविन्दराजस्तु 'यः क्रीत्वा विक्रीणाति स क्रयविक्रयी' इत्येकमेवाह; तदयुक्तम् । 'हननेन तथा हन्ता धनेन क्रयिकस्तथा । विक्रयी तु धनादानात्संस्कर्ता तत्प्रवर्तनात्' इति यमवचनेन पृथङ्निर्देशात् । घातकत्ववचनं चेदमशास्त्रीयपशुवधेऽनुमत्यादयोऽपि न कर्तव्या इत्येवंपरम् । विधिनिषेधपरत्वाच्छास्त्रस्य । खादकादीनां पृथक्प्रायश्चित्तदर्शनात् ॥ ५१ ॥

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अनभ्यर्च्य पितॄन्देवांस्ततोऽन्यो नास्त्यपुण्यकृत् ॥ ५२ ॥

स्वमांसमिति ॥ स्वशरीरमांसं परमांसेन देवपित्राद्यर्चनं विना यो वृद्धिं नेतुमिच्छति तस्मादपरो नापुण्यकर्तास्तीत्यविधिमांसभक्षणनिन्दानुवादः ॥ ५२ ॥

इदानीमनियमिताप्रतिषिद्धमांसभक्षणस्य निवृत्तिर्धर्मायेत्येतद्दर्शयितुमाह—

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥ ५३ ॥

वर्षे वर्षे इति ॥ यो वर्षशतं यावत्प्रतिवर्षमश्वमेधेन यजेत यश्च यावज्जीवं मांसं न खादति तयोः पुण्यस्य फलं स्वर्गादि तुल्यम् ॥ ५३ ॥

फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥ ५४ ॥

फलमूलाशनैरिति ॥ पवित्रफलमूलभक्षणैर्वानप्रस्थभोज्यानां च नीवाराद्यन्नानां भोजनैर्न तत्फलमवाप्नोति यच्छास्त्रानियमिताप्रतिषिद्धमांसवर्जनाल्लभते ॥ ५४ ॥

मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ५५ ॥

मां स भक्षयितेति ॥ इह लोके 'यस्य मांसमहमश्नामि परलोके मां स भक्षयिष्यति' इत्येतत् 'मांस'शब्दस्य निरुक्तं पण्डिताः प्रवदन्ति इति 'मांस'शब्दस्य निर्वचनमवैधमांसभक्षणपापफलबाधनार्थम् ॥ ५५ ॥

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ ५६ ॥

न मांसभक्षण इति ॥ ब्राह्मणादीनां वर्णानां यथाधिकारमविहिताप्रतिषिद्धभक्षणादौ न कश्चिद्दोषः । यस्मात्प्राणिनां भक्षणपानमैथुनादौ प्रवृत्तिः स्वाभाविकोऽयं धर्मः । वर्जनं पुनर्महाफलम् । अविहिताप्रतिषिद्धमद्यमैथुननिवृत्तेर्महाफलकथनार्थोऽयमुक्तस्यैव मांसवर्जनमहाफलकथनस्यानुवादः॥५६॥

प्रेतशुद्धिं प्रवक्ष्यामि द्रव्यशुद्धिं तथैव च ।
चतुर्णामपि वर्णानां यथावदनुपूर्वशः ॥ ५७ ॥

प्रेतशुद्धिमिति ॥ ब्राह्मणादीनां चतुर्णामपि वर्णानां प्रेतेष्वपि पित्रादीनां शुद्धिं ब्राह्मणादिक्रमेण या यस्येति, द्रव्यादीनां च तैजसादीनां शुद्धिमभिधास्यामि ॥ ५७ ॥

तत्र शुद्धेरशुद्धिसापेक्षत्वात्तन्निरूपणार्थमाह—

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।
अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते ॥ ५८ ॥

दन्तजात इति ॥ दन्तजाते । जातदन्त इत्यर्थः । 'वाहिताग्न्यादिषु' (पा० २।२।३७) इत्यनेन 'जात'शब्दस्य परनिपातः । अनुजाते जातदन्ता-

नन्तरे । कृतचूडाकरणे चकारात्कृतोपनयने च संस्थिते मृते सति बान्धवाः सपिण्डाः समानोदकाश्चाशुद्धा भवन्ति । प्रसवे च तथैवाशुद्धा भवन्तीत्युच्यते । वयोविभागेनोद्देशमात्रमिदं वक्ष्यमाणाशौचकालभेदादिसुखावबोधनार्थम् ॥ ५८ ॥

दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
अर्वाक् संचयनादस्थ्नां त्र्यहमेकाहमेव वा ॥ ५९ ॥

दशाहमिति ॥ सप्तपुरुषपर्यन्तं सपिण्डतां वक्ष्यति । सपिण्डेषु शवनिमित्तमाशौचं दशाहोरात्रं ब्राह्मणस्योपदिश्यते । 'शुध्येद्विप्रो दशाहेन' (५।८३) इति वक्ष्यमाणत्वात् । 'अर्वाक्संचयनादस्थ्नाम्' इति चतुरहोपलक्षणम् । 'चतुर्थे दिवसेऽस्थिसंचयनं कुर्यात्' इति विष्णुवचनात्त्र्यहमेकाहं वा । 'अहः'-शब्दोऽहोरात्रपरः । अयं चाग्निवेदादिगुणापेक्षो व्यवस्थितविकल्पः । यदाह दक्षः ( स्मृ. ६।६ )—'एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । हीने हीनं भवेच्चैव त्र्यहश्चतुरहस्तथा' । श्रौताग्निमतो मन्त्रब्राह्मणात्मककृत्स्नशाखाध्यायिन एकाहाशौचम् । तत्र श्रौताग्निवेदाध्ययनगुणयोरेकगुणरहितो हीनस्तस्य त्र्यहः, उभयगुणरहितस्तु हीनतरः, केवलस्मार्ताग्निमांस्तस्य चतुरहः, सकलगुणरहितस्य दशाहः । तदाह पराशरः ( प. स्मृ. ३।५ )—'निर्गुणो दशभिर्दिनैः' इति ॥ ५९ ॥

सपिण्डलक्षणमाह—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ ६० ॥

सपिण्डता त्विति ॥ यं पुरुषं प्रतियोगिनं कृत्वा निरूप्यते तस्य पितामहप्रभृतीन्षट्पुरुषानतिक्रम्य सप्तमे पुरुषे प्राप्ते सपिण्डत्वं निवर्तते । एवं पुत्रपौत्रादिष्वप्यवगन्तव्यम् । पिण्डसंबन्धिनिबन्धना चेयं सपिण्डता । तथा हि—पितृ-पितामह-प्रपितामहेभ्यस्त्रिभ्यः पिण्डदानं, प्रपितामहस्य पित्रादयस्त्रयः पिण्डलेपभुजश्च, तत्पूर्वस्य तु सप्तमस्य पिण्डसंबन्धो नास्तीत्यसपिण्डता । यस्य चैते षट् पुरुषाः सपिण्डाः सोऽपि तेषां सपिण्डः, पिण्डदातृत्वेन तत्पिण्डसंबन्धात् । अतः साप्तपौरुषीयं सपिण्डता । तदुक्तं मत्स्यपुराणे—'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्' । सगोत्रत्वे चेयं सपिण्डता । अत एव शङ्ख-लिखितौ—'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी' । तेन मातामहादीनामेकपिण्डसंबन्धेऽपि न सपिण्डता । समानोदकत्वं पुनरस्मत्कुलेऽमुकनामाऽभूदिति जन्मनामोभयापरिज्ञाने निवर्तते ॥ ६० ॥

[1]यथेदं शावमाशौचं सपिण्डेषु विधीयते ।
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम् ॥ ६१ ॥

यथेदमिति ॥ यथेदं दशाहादिकं शवनिमित्तमाशौचं कर्मानर्हत्वलक्षणं सपिण्डेषु 'दशाहं शावमाशौचम्' ( ५।५९ ) इत्यनेन विधीयते । प्रसवेऽपि सम्यक्शुद्धिमिच्छतां सपिण्डानां तादृशमेवाशौचं भवेत् ॥ ६१ ॥

अनिर्देशेन तुल्यतायां प्राप्तायां विशेषमाह—

सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ६२ ॥

सर्वेषामिति ॥ मरणनिमित्तमस्पृश्यत्वलक्षणमाशौचं सर्वेषामेव सपिण्डानां समानम् । जननिमित्तं तु मातापित्रोरेव भवति । तत्राप्ययं विशेषः—जननिमित्तमस्पृश्यत्वं मातुरेव दशरात्रम् । पिता तु स्नानात्स्पृश्यो भवति । अयमेव संबन्धः संवर्तेन व्यक्तीकृतः—'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः' ॥ ६२ ॥

निरस्य तु पुमाञ्शुक्रमुपस्पृश्यैव शुद्ध्यति ।
बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् ॥ ६३ ॥

निरस्य त्विति ॥ 'स्नानं मैथुनिनः स्मृतम्' ( ५।१४४ ) इति मैथुने स्नानं विधास्यति, तेन मैथुनं विनापि कामतो रेतःस्खलने स्नात्वा पुमाञ्शुद्धो भवति । अकामतस्तु स्वप्नादौ रेतःपाते 'मूत्रवद्रेतस उत्सर्गः' इत्यापस्तम्बोक्तेः स्नानं विनापि गृहस्थस्य शुद्धिः । ब्रह्मचारिणस्त्वकामतोऽपि 'स्वप्ने सिक्त्वा ब्रह्मचारी' ( २।१८१ ) इत्यनेन स्नानादिना शुद्धिरुक्ता । बैजिके तु संबन्धे परपूर्वभार्यायामपत्योत्पत्तौ त्र्यहमाशौचं भवति । तथा च विष्णुः—'परपूर्वभार्यासु त्रिरात्रम्' । रेतःपातिनामाशौचमप्रकृतमपि जननप्रकरणे प्रसङ्गात्तदनुगुणतयोक्तम् । यत्र रेतःपातमात्रेण स्नानं तत्रापत्योत्पत्तौ त्रिरात्रमुचितम् ॥ ६३ ॥

अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः ।
शवस्पृशो विशुध्यन्ति त्र्यहादुदकदायिनः ॥ ६४ ॥

अह्ना चैकेनेति ॥ एकेनाह्ना एकया च रात्र्येत्यहोरात्रेण त्रिरात्रैस्त्रिभिरिति नवाहोरात्रैर्मिलित्वा दशाहेनेति वैदग्ध्येनोक्तम् । ननु दशाहेनेति वक्तव्ये किमर्थोऽयं वाग्विस्तरः, उच्यते,—'भूयसीं लघिष्ठां वा गिरं निर्मान्ति वाग्मिनः ।

पाठा०—1 एकषष्टि-द्विषष्टितमश्लोकौ क्वचिन्न पठ्येते, क्वचित्तु 'जननेऽप्येवमेव स्यान्मातापित्रोस्तु सूतकम् । सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः' इति पाठस्तत्स्थले च पठ्यते ।

न चावश्यत्वमेतेषां लघूक्त्यैव नियम्यते।' वृत्तस्वाध्यायगुणयोगेन ये सपिण्डा एकाहाद्यल्पाशौचयोग्यास्ते यदि स्नेहादिना शवस्पृशो भवन्ति तदा दशाहेनैव शुद्ध्यन्ति । उदकदायिनः पुनः समानोदकाशुचग्रहेण । गोविन्दराजस्तु धनग्रहणपूर्वकशवनिर्हारकसंबन्धिब्राह्मणविषयमिदं दशाहाशौचमाह ॥ ६४ ॥

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेतहारैः[1] समं तत्र दशरात्रेण शुध्यति ॥ ६५ ॥

गुरोरिति ॥ गुरोराचार्यादेरसपिण्डस्य मृतस्य शिष्योऽन्त्येष्टिं कृत्वा प्रेतनिर्हारकैर्गुरुसपिण्डैस्तुल्यो दशरात्रेण शुद्धो भवति ॥ ६५ ॥

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥ ६६ ॥

रात्रिभिरिति ॥ अत्र रात्रिभिरिति विधेयगामिनो बहुत्वस्य विवक्षितत्वात् तृतीयमासात्प्रभृति गर्भस्रावे गर्भमासतुल्याहोरात्रैर्विशेषाभिधानाच्चातुर्वर्ण्यस्त्री विशुध्यति । एतच्च षण्मासपर्यन्तम् । यथोक्तमादिपुराणे—'षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ अत ऊर्ध्वं तु जात्युक्तमाशौचं तासु विद्यते'। मेधातिथि-गोविन्दराजादयस्त्वादिपुराणे वचनादर्शनात्सप्तमासादर्वाग्गर्भस्रावे मासतुल्याहोरात्रैः स्त्रीणां विशुद्धिरित्यतिदिशन्ति । प्रथमद्वितीयमासीयगर्भस्रावे स्त्रीणां त्रिरात्रम् । यथाह हारीतः—'गर्भस्रावे स्त्रीणां त्रिरात्रं साधीयो रजोविशेषत्वात् । पित्रादिसपिण्डानां त्वत्र सद्यःशौचम्' । यथाह सुमन्तुः—'गर्भमासतुल्या दिवसा गर्भसंस्रवणे सद्यःशौचं वा भवति' । गर्भमासतुल्या इति स्त्रीविषयं सद्यःशौचं वेति पित्रादिसपिण्डविषयमिति व्यवस्थितविकल्पः । रजस्वला च स्त्री रजसि निवृत्ते सति पञ्चमे दिने स्नानेनादृष्टार्थकल्पनयोग्या भवति । स्पर्शयोग्या तु त्रिरात्रव्यपगमे चतुर्थेऽहनि कृतस्नानेनैव शुद्धा भवति ॥ ६६ ॥

नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता ।
निर्वृत्तचूडकानां[2] तु त्रिरात्राच्छुद्धिरिष्यते ॥ ६७ ॥

नृणामिति ॥ अकृतचूडानां बालानां मरणे सपिण्डानामहोरात्रेण शुद्धिर्भवति । कृतचूडानां तु मरणे प्रागुपनयनात्[3] त्रिरात्रेण शुद्धिः ॥ ६७ ॥

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलंकृत्य शुचौ भूमावस्थिसंचयनादृते ॥ ६८ ॥

ऊनद्विवार्षिकमिति ॥ असंपूर्णद्विवर्षं बालं मृतमकृतचूडं मालादिभिरलंकृत्य ग्रामाद्बहिः कृत्वा विशुद्धायां भूमौ कालान्तरे शीर्णदेहतयाशक्यमस्थि-

पाठा०—1 प्रेताहारैः. 2 निर्वृत्तमुंडकानां तु. 3 प्रागुपनयनकालात्.

संचयनवर्जं बान्धवाः प्रक्षिपेयुः। विश्वरूपस्तु—'यस्यां भूमावन्यस्यास्थिसंचयनं न कृतं तस्यां निदध्युः' इति व्याचष्टे ॥ ६८ ॥

**नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ।**
**अरण्ये काष्ठवत्त्यक्त्वा क्षपेत[1] त्र्यहमेव च[2] ॥ ६९ ॥**

नास्येति ॥ अस्योनद्विवार्षिकस्याग्निसंस्कारो न कर्तव्यः । नाप्युदकक्रिया कर्तव्या । उदकदाननिषेधोऽयं श्राद्धादिसकलप्रेतकृत्यनिवृत्त्यर्थः । किं त्वरण्ये काष्ठवत्परित्यज्य । काष्ठवदिति शोकाभावोऽभिहितः । यथारण्ये काष्ठं परित्यज्य शोको न भवति, एवं त्यक्त्वा त्र्यहं क्षपेत्र्यहाशौचं कुर्यात् । अयं चाकृतचूडस्य त्र्यहाशौचविधिः पूर्वोक्तैकाहाशौचविकल्पपरः । स च व्यवस्थितो वृत्तस्वाध्यायादियुक्तस्यैकाहः, तद्रहितस्य त्र्यहः। यद्यपि मनुना परित्यागमात्रं विहितं तथापि 'ऊनद्विवर्षं[3] निखनेत्' (याज्ञ. स्मृ. आशौच. १।१) इति याज्ञवल्क्यवचनाद्विशुद्धभूमौ निखायैव त्यक्तव्यः ॥ ६९ ॥

**नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।**
**जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥ ७० ॥**

नात्रिवर्षस्येति ॥ अप्राप्ततृतीयवर्षस्य पित्रादिसपिण्डैरुदकक्रिया न कर्तव्येति पूर्वत्रनिषिद्धाप्युत्तरार्थमनूद्यते । जातदन्तस्य वोदकदानं कर्तव्यं । नामकरणे वा कृते उदकक्रियासाहचर्यादग्निसंस्कारोऽप्यनुज्ञामात्रं, प्रेतपिण्डश्राद्धादिकं च यद्यप्यकरणसंभवे करणं क्लेशावहं तथापि करणाकरणयोराज्ञानाज्जातदन्तकृतनाम्नोः करणे प्रेतोपकारो भवति, अकरणे प्रत्यवायाभाव इत्यवगम्यते ॥ ७० ॥

**सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् ।**
**जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥ ७१ ॥**

सब्रह्मचारिणीति ॥ सहाध्यायिनि मृते एकरात्रमाशौचं कर्तव्यम् । समानोदकानां पुनः पुत्रजनने सति त्रिरात्रेण शुद्धिर्भवति । 'त्र्यहादुदकदायिनः' (५।६४) इति मरणविषयमुक्तम् ॥ ७१ ॥

**स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।**
**यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥ ७२ ॥**

स्त्रीणामिति ॥ स्त्रीणामकृतविवाहानां वाग्दत्तानां मरणे बान्धवा भर्त्रादयस्त्र्यहेण शुद्ध्यन्ति । वाग्दानं विना भर्तृपक्षे संबन्धाभावाद्श्रुतमपि वाग्दानान्तपर्यन्तं बोद्धव्यम् । सनाभयः पितृपक्षाः वाग्दत्तानां विवाहादर्वाङ्मरणे 'यथोक्तेनैव कल्पेन' इत्येतच्छ्लोकपूर्वार्धोक्तेन त्रिरात्रेणैव शुध्यन्तीत्यर्थः । तदुक्तमादिपुराणे—

पाठा०—1 क्षपेयुः. 2 तु. 3 °द्विवार्षिकं.

१ तस्यायमाशयः—यथा जनो वनादौ काष्ठं त्यक्त्वा तद्विषये उदासीनो भवति तथैवोनद्विवार्षिकमकृतचूडं प्रेतं खातभूमौ 'परेयिवांसं' (ऋ. सं. ७।६।१४) इत्यादि यमसूक्तमनुस्मरन्परित्यजेत्; ततश्च स प्रेतस्यौर्ध्वदेहिकादिषूदासीन एव वर्तेत इति ।

